श्रीः ।

# नित्यकर्मपद्धतिः

खेमराज-श्रीकृष्णदास

इत्यनेन

स्वकीये

श्रीवेंकटेश्वराख्यमुद्रायन्त्रालये

मुद्रिता

शालिवाहनशकाब्दाः १८१६

विक्रमादित्यसंवत् १९५१

अथ

# नित्यकर्मपद्धतिः ॥



## प्रभाते गात्रमार्जनानन्तरं स्मरणीयं ॥

ब्रह्मा मुरारिस्त्रिपुरान्तकारी भानुःशशीभूमिसुतो बुधश्च ॥ गुरुश्च शुक्रः शनिराहुकेतवः कुर्व्वन्तुसर्वे मम सुप्रभातं॥ १ ॥प्रभाते यः स्मरेन्नित्यं दुर्गादुर्गाक्षरद्वयम् ॥ आपदस्तस्य नश्यन्ति तमः सूर्योदये यथा॥२॥अहल्या द्रौपदी सीता तारा मन्दोदरी तथा॥पञ्चकन्यास्मरेन्नित्यं महापातकनाशनं ॥ ३ ॥ पुण्यश्लोको नलो राजा पुण्यश्लोको युधिष्ठिरः ॥ पुण्यश्लोको विदेहश्च पुण्यश्लोको जनार्द्दनः ॥ ४ ॥

## स्नानात् पूर्वं पाठ्यम् ॥

विष्णुपादाब्जसंभूतेगङ्गे त्रिपथगामिनि ॥ धर्म्मद्रवीति विख्याते पापं मे हर जाह्नवि ॥ १ ॥

पापोऽहं पापकर्माहं पापात्मा पापसम्भवः ॥ त्राहि मां पुण्डरीकाक्ष सर्वपापहरोभव ॥२॥ स्नानविधिः ॥ आचमनं कृत्वा ॥ विष्णुर्विष्णुः अद्य अमुके मासि अमुके पक्षे अमुकतिथौ अमुकगोत्रःअमुकदेवशर्मा वा अमुकदासः श्रीविष्णुप्रीतिकामः अस्यां गङ्गायां स्नानमहं करिष्ये ॥ ब्राह्मणश्चेत् विष्णुरोंतत्सत् अद्येतिब्रूयात् ॥ ततो मुखनासिकाचक्षुःकर्णादि कराभ्यामाच्छाद्य स्नायात् ॥

## स्नानानन्तरं पाठ्य स्तोत्रं ॥

गङ्गायै नमः॥देवि सुरेश्वरि भगवति गङ्गे त्रिभुवनतारिणि तरलतरङ्गे ॥ शङ्करमौलिनिवासिनि विमले मम मतिरास्तां तवपदकमले॥१॥भागीरथि सुखदायिनि मातस्तवजलमहिमा निगमे ख्यातः॥ नाहं जाने तव महिमानं त्राहि कृपामयि मामज्ञानं ॥ २ ॥ हरिपददात्रि तरङ्गिणिगङ्गे हिमविधुमुक्ताधवलतरङ्गे॥दूरीकुरु ममदुष्कृतिभारं कुरु

कृपयाभवसागरपारं ॥ ३ ॥ तव जलममलं येन निपीतं परमपदं खलु तेन गृहीतं ॥ मातर्गङ्गे त्वयि यो भक्तः किल तं द्रष्टुं न यमः शक्तः ॥ ४ ॥ पतितोद्धारिणि जाह्नवि गङ्गे खण्डितगिरिवरमण्डितभङ्गे ॥ भीष्मजननि खलु मुनिवरकन्ये पतित निवारिणि त्रिभुवनधन्ये ॥५॥ कल्पलतामिव फलदां लोके प्रणमति यस्त्वां नपतति शोके ॥ पारावारविहारिणि गङ्गे मुखवनिताकृततरलापाङ्गे ॥ ६ ॥ तव कृपया चेत् स्रोतः स्नातः पुनरपि जठरे सोऽपि न जातः ॥ नरकनिवारिणि जाह्नवि गङ्गे कलुषविनाशिनिमहिमोत्तुङ्गे ॥ ७ ॥ पुण्यदर्शने पुण्यतरंगे जय जय जाह्नवि करुणापाङ्गे ॥ इन्द्रमुकुटमणिराजितचरणे सुखदे शुभदे सेवकशरणे ॥ ८ ॥ रोगं शोकं तापं पापं हर मे भगवति कुमतिकलापं॥त्रिभुवनसारे वसुधाहारे त्वमसि गुरुर्मम खलु संसारे ॥ ९ ॥ लोकानन्दे परमानन्दे कुरु मयि करुणां

कातरवन्द्ये ॥ तव तटनिकटे यस्य निवासः खलु वैकुण्ठे तस्य निवासः ॥ १० ॥ वरमिह नीरे कमठो मीनः किंवा तीरे सरटः क्षीणः ॥ अथवा नीचः श्वपचो दीनो दूरे नृपतिस्तव न कुलीनः॥११॥ भो भुवनेश्वरि पुण्ये धन्ये देवि द्रवमयि मुनिवरकन्ये ॥ गङ्गास्तवमिदममलं नित्यं पठति नरोयःस जयति सत्यं ॥ १२ ॥ येषां हृदये गङ्गाभक्तिस्तेषां भवति सदा सुखमुक्तिः ॥ मधुहरकान्तापज्झटिकाभिः परमानन्दकलितललिताभिः ॥ १३ ॥गङ्गास्तोत्रमिदं भवसारं वांच्छितफलदंपरमंसुखदं॥ शङ्करसेवकशङ्कररचितं पठतिनरो यस्तस्य भवेच्छम् ॥ १४ ॥ इतिगंगास्तोत्रंसम्पूर्णम् ॥

## अथगङ्गाप्रणामः ॥

सद्यः पातकसंहर्त्रीं सद्योदुःखविनाशिनी ॥
सुखदा मोक्षदा गङ्गा गङ्गैव परमागतिः ॥

## अथगङ्गामाहात्म्यम् ॥

गङ्गा गङ्गेति यो ब्रूयाद् योजनानां शतैरपि ॥
मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥१॥

## अथगङ्गाष्टकम् ॥

यत्त्यक्तं जननीगणैर्यदपि न स्पृष्टं सुहृद्बान्धवैर्यस्मिन् पान्थहृगन्तसन्निपतिते तैः स्मर्यते श्रीहरिः ॥ स्वाङ्के न्यस्य तदीदृशं वपुरहोऽस्वीक्रीयते पौरुषं त्वंतावत् करुणापरायणपरा मातासि भागीरथि ॥ १ ॥ अच्युतचरणतरङ्गिणि गङ्गे शशिमौलिमालतीमाले ॥ त्वयि तनुवितरणसमये देया हरता न मे हरिता॥२॥शून्यीभूता शमननगरी नीरवारारवाद्या यातायातैःप्रतिदिनमहो भेद्यमाना विमानाः ॥ सिद्धैः सार्द्धं दिवि दिविषदः सार्घ्यपात्रैकहस्ता मातर्गङ्गे यदवधि तव प्रादुरासीत् प्रवाहः ॥ ३ ॥ पयोहि गाङ्गं त्यजतामिहाङ्गं पुनर्न चाङ्गं यदिवापि चाङ्गं ॥ करे रथाङ्गं शयने भुजङ्गं याने-

विहङ्गं चरणेंबु गाङ्गं ॥ ४ ॥ कत्यक्षीणि करोटयःक
ति कति द्वीपिद्विपानां त्वचः काकोलाःकति पन्न-
गाःकति सुधाधाम्नश्च खण्डाः कति ॥ किञ्च त्वं च
कति त्रिलोकजननि त्वद्वारिपूरोदरे मज्जज्जन्तुक-
दम्बकंसमुदयत्यैकैकमादाययत् ॥ ५ ॥ कुतो वा-
पी वीचिस्तव यदि गता लोचनपथं त्वमापीता
पीताम्बरपुरनिवासं वितरसि ॥ त्वदुत्सङ्गे गङ्गे य-
दि पतति कायस्तनुभृतां तदा मातः शातक्रतव-
पदलाभोऽप्यतिलघुः ॥ ६ ॥ त्वदम्भो लोकाना-
मखिलदुरितान्येव दहति प्रगन्त्री निम्नानामपि न-
यसि सर्वोपरिगतान् ॥ स्वयं जाता विष्णोर्जनय-
सिमुराराातिनिवहा नहो मातर्गङ्गे किमिह चरितं
ते विजयते ॥ ७ ॥ सुरधुनि मुनिकन्ये तारयेः पु-
ण्यवंतं स तरति निजपुण्यैस्तत्र किन्ते महत्त्वम्॥य
दि च गतिविहीनं तारयेः पापिनं मां तदिह तव
महत्त्वं तन्महत्त्वं महत्त्वं॥८॥इति गंगाष्टकं संपूर्णं ॥

## अथ श्रीविष्णोर्नामाष्टकं॥

नमो नारायणाय। अच्युतं केशवं विष्णुं हरिं सत्यं जनार्द्दनं ॥ हंसं नारायणं चैवं एतन्नामाष्टकं शुभं ॥ १ ॥ त्रिसन्ध्यं यः पठेन्नित्यं पापं तस्य न विद्यते॥शत्रुसैन्यं क्षयं याति दुःस्वप्नःसुस्वप्नो भवेत् ॥२॥ गङ्गायां मरणं चैव दृढ़ा भक्तिश्च केशवे॥ ब्रह्मविद्याप्रबोधश्च तस्मान्नित्यं पठेन्नरः ॥३॥ इति श्रीब्रह्मपुराणे श्रीविष्णोर्नामाष्टकस्तोत्रं संपूर्णम् ॥

## अथ श्रीविष्णोः षोडशनामस्तोत्रं ॥

औषधे चिन्तयेद्विष्णुं भोजने च जनार्द्दनं ॥ शयने पद्मनाभं च विवाहे च प्रजापतिं॥१॥ युद्धे चक्रधरं देवं प्रवासे च त्रिविक्रमं ॥ नारायणं तनुत्यागे श्रीधरं प्रियसङ्गमे ॥ २ ॥ दुःस्वप्ने स्मर गोविन्दं संकटे मधुसूदनं ॥ कानने नरसिंहं च पावके जलशायिनं ॥ ३ ॥ जलमध्ये वराहं च पर्वते रघुनन्दनं ॥ गमने वामनं चैव सर्वकार्येषु माधवं ॥ ४ ॥

षोडशैतानि नामानि प्रातरुत्थाय यः पठेत् ॥ सर्व
पापविनिर्मुक्तो विष्णुलोके महीयते ॥ ९ ॥ इति
विष्णोःषोडशनामस्तोत्रं संपूर्णम् ॥

## अथ श्रीराधास्तोत्रम् ॥

राधा रासेश्वरी रम्या परमा च परात्मिका ॥
रासोद्भवा कृष्णकान्ता कृष्णवक्षःस्थलस्थिता॥१॥
कृष्णप्राणाधिका देवी महाविष्णुप्रसूरपि ॥ सर्वदा
विष्णुमाया च सत्यासत्या सनातनी ॥ २ ॥
ब्रह्मस्वरूपा परमा निर्लिप्ता निर्गुणा परा ॥ वृन्दा
वने च विजया यमुनातटवासिनी ॥ ३ ॥ गोपा-
ङ्गनानां प्रथमा गोपिका गोपमातृका ॥ सानन्दा
परमानन्दा नन्दनन्दनकामिनी ॥ ४ ॥ वृषभानु-
सुता कान्ता शान्त्यर्पणतमस्यच ॥ कामा कलाव-
ती कन्या तीर्थपूता सनातनी ॥ ५ ॥ सप्तत्रिंशच्च
नामानि वेदोक्तानि शतानिच ॥ सारभूतानि पुण्या
नि सर्वनामसु नारद ॥ ६ ॥ नवीनां हेमगौराङ्गीं

पूर्णानन्दवतीं सतीं ॥ वृषभानुसुतां देवीं वन्दे राधां जगत्प्रसूम् ॥ ७ ॥ इतिराधास्तवः ॥

## अथ जयदेवकृतदशावतारस्तोत्रम्॥

प्रलयपयोधिजले धृतवानसि वेदं ॥ विहितवहित्रचरित्रमखेदं ॥ केशवधृतमीनशरीर जय जगदीश हरे ॥१॥क्षितिरिह विपुलतरे तव तिष्ठति पृष्ठे धरणीधरणकिणचक्रगरिष्ठे॥केशव धृतकच्छपरूप जय जगदीश हरे॥२॥वसति दशनशिखरे धरणी तव लग्ना शशिनिकलंककलेव निमग्ना॥केशव धृतसूकररूप जय जगदीश हरे॥३॥तवकरकमलवरे नखमद्भुतशृङ्गं दलितहिरण्यकशिपुतनुभृङ्गम् ॥ केशव धृतनरहरिरूप जय जगदीश हरे ॥ ४ ॥ छलयसि विक्रमणे बलिमद्भुतवामन पदनखजनितनीरजनपावन ॥ केशवधृतवामनरूप जय जगदीश हरे ॥ ५ ॥ क्षत्रियरुधिरमये जगदपगत पापं स्नपयसि पयसि शमितभवतापं ॥ केशवधृतभृगुपतिरूप जय जगदीश हरे॥ ६ ॥ वि-

तरासि दिक्षु रणेदिक्पतिकमनीयं दशमुखमौलि बलिं रमणीयं ॥ केशव धृतरामशरीर जय जगदीश हरे ॥ ७ ॥ वहसि वपुषि विशदे वसनं जलदाभं हलहतिभीतिमिलितयमुनाभं ॥ केशव धृतहल धररूप जय जगदीश हरे ॥ ८ ॥ निंदसि यज्ञविधे रहह श्रुतिजातं सदयहृदयदर्शितपशुघातम् ॥ केशव धृतबुद्धशरीर जय जगदीश हरे ॥९॥ म्ले- च्छनिवहनिधने कलयसि करवालं धूमकेतुमिव- कमपि करालं ॥ केशव धृतकल्किशरीर जय जग- दीश हरे ॥ १० ॥ श्रीजयदेवकवेरिदमुदितमुदारं शृणु सुखदं शुभदं भवसारं ॥ केशव धृतदशविध रूप जय जगदीश हरे ॥ ११ ॥ वेदानुद्धरते जग न्ति वहते भूगोलमुद्बिभ्रते दैत्यं दारयते बलिं छ- लयते क्षत्रक्षयं कुर्वते॥पौलस्त्यं जयते हलं कलय ते कारुण्यमातन्वते म्लेच्छान् मूर्च्छयते दशाकृ तिकृते कृष्णाय तुभ्यं नमः ॥ १२ ॥ इतिदशाव- तारस्तोत्रम् ॥

## अथजगन्नाथस्तोत्रम् ॥

नमः श्रीकृष्णचैतन्यचन्द्राय ॥ कदाचित्कालिन्दीतटविपिनसंगीतकरवो मुदाभीरीनारीवदनकमलास्वादमधुपः ॥ रमाशम्भुब्रह्मामरपतिगणेशार्चितपदो जगन्नाथःस्वामी नयनपथगामी भवतुमे ॥ १ ॥ भुजे सव्ये वेणुंशिरसि शिखिपुच्छं कटितटे दुकूलं नेत्रान्तेसहचरकटाक्षंचविदधत् ॥ सदा श्रीमद्वृन्दावनवसतिलीलापरिचयो जगन्नाथः स्वामी नयनपथगामी भवतुमे ॥ २ ॥ महाम्भोधस्तीरेकनकरुचिरेनीलशिखरे वसन्प्रासादांतेसहजबलभद्रेण बलिना ॥ सुभद्रामध्यस्थः सकलसुरसेवावसरदो जगन्नाथःस्वामी नयनपथगामी भवतु मे ॥ ३ ॥ कृपापारावारः सजलजलदश्रेणिरुचिरो रमावाणीरामः स्फुरदमलपद्मेक्षणमुखः ॥ सुरेन्द्रैराराध्यः श्रुतिमुखगणोद्गीतचरितो जगन्नाथः स्वामी नयनपथगामी भवतुमे ॥ ४ ॥ रथारूढो गच्छ

न् पथिमिलितभूदेवपटलैः स्तुतिप्रादुर्भावंप्रतिप दमुपाकर्ण्य सदयः ॥ दयासिन्धुर्बन्धुः सकलजगतां सिन्धुसुतया जगन्नाथः स्वामी नयनपथगामी भवतुमे ॥ ५ ॥ परब्रह्मापीडो विकचकमलाभेक्षणयुगो निवासी नीलाद्रौ निहितचरणोऽनन्तशिरसि ॥ रसानन्दीराधासरसवपुरानन्दनसुखो जगन्नाथः स्वामी नयनपथगामीभवतुमे॥६॥ नयाचेऽहंराज्यं न चकनकमाणिक्यविभवंऽनयाचेऽहं रम्यां सकलजनकाम्यां वरवधूम् ॥ सदा काले काले प्रमथपतिनोद्गीतचरितो जगन्नाथःस्वामी नयनपथगामी भवतुमे ॥ ७ ॥ हरत्वं संसारं द्रुततरमसारं सुरपते हरत्वंपापानां विततिमपरां यादवपते ॥ अहो दीनानाथानिहितमचलंनिश्चितमिदं जगन्नाथःस्वामी नयनपथगामी भवतुमे ॥ ८ ॥ जगन्नाथाष्टकं पुण्यंयः पठेत्प्रयतःशुचिः ॥ सर्वपापविशुद्धात्मा विष्णुलोकं सगच्छति ॥ ९ ॥ इति चैतन्यचंद्रमुखपद्माविनिर्गतं श्रीजगन्नाथाष्टकं समाप्तं ॥

## अथाचमनं ॥

नमः अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ॥ यः स्मरेत् पुण्डरीकाक्षं सबाह्याभ्यन्तरः शुचिः ॥ श्रीविष्णुः श्रीविष्णुः श्रीविष्णुः ॥ ॥

## अथशूद्रस्य तर्पणविधिः ॥

पूर्वाभिमुखः ॥ नमो ब्रह्मा तृप्यतां नमो विष्णुस्तृप्यतां नमो रुद्रस्तृप्यतां नमः प्रजापतिस्तृप्यताम् ॥ ॥ ॥ ॥

नमो देवा यक्षास्तथा नागागन्धर्वाप्सरसोसुराः॥ क्रूराः सर्पाः सुपर्णाश्च तरवो जिह्मगाः खगाः॥ विद्याधरा जलधरास्तथैवाकाशगामिनः ॥ निराहाराश्च ये जीवाः पापधर्म्मे रताश्चये ॥ तेषामाप्यायनायैतद्दीयते सलिलंमया ॥ तत उत्तराभिमुख उत्तरीयं मालावत् कृत्वा ॥ नमः ॥ सनकश्च सनन्दश्च तृतीयश्चसनातनः ॥कापिलश्चासुरिश्चैव वोढुः

पञ्चशिखस्तथा ॥ सर्वेते तृप्तिमायान्तु मद्दत्तेनाम्बुना सदा ॥ इति विपरीतक्रमेणाञ्जलिद्वयं दद्यात् ॥

## ततः पूर्वाभिमुखः प्रकृतोत्तरीयः ॥

नमो मरीचिस्तृप्यतां नमोऽत्रिस्तृप्यतां नमोऽङ्गिरास्तृप्यतां नमःपुलहस्तृप्यतां नमः क्रतुस्तृप्यतां नमो भृगुस्तृप्यतां नमः प्रचेतास्तृप्यतां नमो वसिष्ठस्तृप्यतां नमो नारदस्तृप्यताम् ॥ ॥

## ततो दक्षिणाभिमुखो विपरीतोत्तरीयः ॥

नमः अग्निष्वात्ताः पितरस्तृप्यंतामेतत् सतिलगंगोदकं तृप्यस्व ॥ नमः सौम्याः पितरस्तृप्यन्तामेतत् सतिलगंगोदकं तृप्यस्व ॥ नमो हविष्मन्तः पितरस्तृप्यन्तामेतत् सतिलगंगोदकं तृप्यस्व ॥ नम ऊष्मपाः पितरस्तृप्यन्तामेतत् सतिलगंगोदकं तृप्यस्व ॥ नमः सुकालिनः पितरस्तृप्यन्तामेतत् सतिलगंगोदकं तृप्यस्व ॥ नमो बर्हिषदः

पितरस्तृप्यन्तामेतत् सतिलगंगोदकं तृप्यस्व॥न-
म आज्यपाः पितरस्तृप्यंतामेतत् सतिलगंगोदकं
तृप्यस्व ॥ प्रत्येकमेकांजलिं दद्यात् सामान्यजले
सतिलोदकमितिवदेत् ॥ ॥ ॥

## दक्षिणाभिमुखो यमतर्पणं ॥

नमः ॥ यमाय धर्म्मराजाय मृत्यवे चान्तका-
य च ॥ वैवस्वताय कालाय सर्वभूतक्षयाय च॥१॥
औदुम्बराय दध्नाय नीलाय परमेष्ठिने॥वृकोदराय
चित्राय चित्रगुप्ताय वै नमः ॥ २ ॥

## ततो दक्षिणाभिमुखः पितृतर्पणं ॥

नमःआगच्छन्तु मे पितर इमं गृह्णन्त्वापोऽञ्ज
लिं ॥ विष्णुर्नमः अमुकगोत्रः पिता अमुकदासः
तृप्यस्वैतत् सतिलगङ्गोदकं तुभ्यं नमः ( सा-
मान्यजले सतिलोदकमिति वदेत् ) एवं पितामह
प्रपितामहमातामहप्रमातामहवृद्धप्रमातामहेभ्यः

प्रत्येकं अंजलित्रयं दद्यात् ॥ अमुकगोत्रा माता अमुकीदासी तृप्यस्वैतत् सतिलगङ्गोदकं तुभ्यं नमः ॥ एवं पितामहीप्रपितामहीभ्यां एवंमातामहीप्रमातामहीवृद्धप्रमातामहीभ्यः अंजलित्रयं दद्यात् ॥ ततः पत्न्यै पितृव्यप्रभृतिभ्रातृवर्गादिभ्यः प्रत्येकं एकांजलिं दद्यात् ॥ ॥ ॥

## रामतर्पणं ॥

आब्रह्मभुवनाल्लोका देवर्षिमुनिमानवाः ॥ तृप्यन्तु पितरः सर्वे मातृमातामहादयः ॥ अतीतकुलकोटीनां सप्तद्वीपनिवासिनां ॥ मयादत्तेन तोयेन तृप्यतां भुवनत्रयम् ॥

## लक्ष्मणतर्पणं ॥

आब्रह्मस्तम्बपर्यन्तं सतिलगंगोदकं जगत्तृप्यतु

## ततो भीष्मतर्पणं ॥

वैयाघ्रपद्यगोत्राय सांकृतिप्रवराय च ॥ अपुत्राय ददाम्येतत् सलिलं भीष्मवर्मणे ॥

प्रणामः ॥ भीष्मः शान्तनवो वीरः सत्यवादी जितेंद्रियः ॥ आभिरद्भिरवाप्नोतु पुत्रपौत्रोचितां क्रियां ॥

नमः ॥ येऽबान्धवा बान्धवा वा येऽन्यजन्मानि बान्धवाः॥तेतृप्तिमखिलां यान्तु ये चास्मत्तोयकांक्षिणः ॥ इत्यनेनैकांजलिं दद्यात् ॥ ततो जलादुत्थाय द्विराचम्य वस्त्रनिष्पीडनोदकेन तर्पयेत् ॥ यथा॥ नमः ॥ ये चास्माकं कुले जाता अपुत्रा गोत्रिणो मृताः। ते तृप्यन्तु मया दत्ताद्वस्त्रनिष्पीड नोदकात् ॥

नमः॥ पिता स्वर्गः पिता धर्म्मः पिता हि परमन्तपः॥ पितरि प्रीतिमापन्ने प्रीयन्ते सर्वदेवताः ॥ पितृचरणेभ्यो नमः ॥

सूर्यार्घ्यम्॥नमो विवस्वते ब्रह्मन्भास्वते विष्णुतेजसे ॥ जगत्सवित्रे शुचये सवित्रे कर्म्मदायिने ॥ इदमर्घ्यंनमः ॥ श्रीसूर्याय नमः ॥

## सूर्यप्रणामः ॥

नमः॥जपाकुसुमसङ्काशं काश्यपेयं महाद्युतिं॥ ध्वान्तारिं सर्वपापघ्नं प्रणतोस्मि दिवाकरं ॥

## सूर्यस्तोत्रं ॥

वसिष्ठ उवाच ॥ स्तुवन्नासीत्ततः साम्बः कृशो धमनिसन्ततः ॥ राजन्नामसहस्रेण सहस्रांशुं दिवाकरं ॥ खिद्यमानं तु तं दृष्ट्वा सूर्यः कृष्णात्मजं तदा ॥ स्वप्ने तु दर्शनं दत्त्वा पुनर्वचनमब्रवीत् ॥ श्रीसूर्य उवाच ॥ साम्ब साम्ब महाबाहो शृणु जाम्बवतीसुत ॥ अलं नामसहस्रेण पठस्वेमं स्तवं शुभं ॥ यानि नामानि गुह्यानि पवित्राणि शुभानि च॥तानि ते कीर्तयिष्यामि श्रुत्वा तच्चा-वधारय ॥ विकर्त्तनो विवस्वांश्च मार्त्तण्डो भास्क-रो रविः ॥ लोकप्रकाशकः श्रीमान् लोकचक्षुर्ग्रहे-श्वरः॥लोकसाक्षी त्रिलोकेशः कर्त्ता हर्त्ता तमि-स्रहा ॥ तपनस्तापनश्चैव शुचिः सप्ताश्ववाहनः ॥

गभस्तिहस्तो ब्रह्मा च सर्वदेवनमस्कृतः ॥ एकविंशतिरित्येष स्तव इष्टः सदा मम ॥ लक्ष्म्यारोग्यकरश्चैव धनवृद्धियशस्करः ॥ स्तवराज इति ख्यातस्त्रिषु लोकेषु विश्रुतः ॥ य एतेन महाभाग द्वे सन्ध्ये ऽस्तमनोदये ॥ स्तौति मां प्रणतो भूत्वा सर्वपापैः प्रमुच्यते ॥ कायिकं वाचिकं चैव मानसं चैव दुष्कृतं ॥ एकजप्येन तत्सर्वं प्रणश्यति ममाग्रतः ॥ एष जप्यश्च होमश्च सन्ध्योपासनमेव च ॥ बलिमन्त्रोऽर्घ्यमन्त्रश्च धूपमन्त्रस्तथैवच ॥ अन्नदाने च, स्नाने च प्रणिपाते प्रदक्षिणे ॥ पूजितोऽयं महामन्त्रः सर्वपापहरः शुभः ॥ एवमुक्त्वा तु भगवान् भास्करो जगदीश्वरः ॥ आमन्त्र्य कृष्णतनयं तत्रैवान्तरधीयत ॥ साम्बो ऽपि स्तवराजेन स्तुत्वा सप्ताश्ववाहनं ॥ पूतात्मा नीरुजः श्रीमान् बलैश्वर्ययुतोऽभवत् ॥ इति श्रीसाम्बपुराणे रोगापनयने श्रीसूर्यवक्त्रविनिर्गतः स्तवराजः समाप्तः ॥

## अथ सूर्यस्य द्वादशनामस्तोत्रम् ॥

आदित्यः प्रथमं नामद्वितीयन्तु विभाकरः ॥ तृतीयं भास्करः प्रोक्तं चतुर्थंच प्रभाकरः ॥ पंचमं च सहस्रांशुः षष्ठं चैव त्रिलोचनः ॥ सप्तमं हरिदश्वश्च अष्टमं च विभावसुः ॥ नवमं दिनकृत् प्रोक्तो दशमं द्वादशात्मकः ॥ एकादशं त्रयीमूर्तिर्द्वादशं सूर्य एव च ॥ द्वादशैतानि नामानि प्रातःकाले पठेन्नरः ॥ दुःस्वप्ननाशनं सद्यः सर्वसिद्धिः प्रजायते ॥ आयुरारोग्यमैश्वर्यं पुत्रपौत्रप्रवर्धनं ॥ ऐहिकामुष्मिकादीनि लभंते नात्रसंशयः ॥ इति सूर्यद्वादशनामस्तोत्रं संपूर्णम् ॥

## अथ तुलस्यवचयनमन्त्रः ॥

तुलस्यमृतनामासि सदा त्वं केशवप्रिया ॥
केशवार्थे चिनोमि त्वां वरदा भव शोभने ॥

## तुलसीस्नानमन्त्रः ॥

गोविन्दवल्लभां देवीं भक्तचैतन्यकारिणीं ॥

स्नापयामि जगद्धात्रीं विष्णुभक्तिप्रदायिनीं ॥

## तुलसीस्तोत्रम् ॥

तुलसी सर्वभूतानां महापातकनाशिनी ॥ अ-
पवर्गप्रदे देवि वैष्णवानां प्रिया सदा ॥ सत्ये सत्य-
वती चैव त्रेतायां मानवी तथा ॥ द्वापरे अवर्ता-
र्णासि वृन्दा त्वं तुलसी कलौ ॥

## तुलसीप्रणामः ॥

वृन्दायै तुलसीदेव्यै प्रियायै केशवस्य च ॥ वि-
ष्णुभक्तिप्रदे देवि सत्यवत्यै नमोनमः ॥

## गणेशस्य ध्यानं ॥

खर्वस्थूलतनुं गजेन्द्रवदनं लम्बोदरं सुन्दरं प्र-
स्यन्दन्मधुगन्धलुब्धमधुपव्यालोलगण्डस्थलं ॥ द-
न्ताघातविदारितारिरुधिरैः सिंदूरशोभाकरं वन्दे
शैलसुतासुतं गणपतिं सिद्धिप्रदं कामदं ॥ इति-
ध्यात्वा मानसोपचारैः संपूज्य पाद्यादिभिः पूज-
येत् ॥ इति संपूज्य ॥

## गणेशस्यप्रार्थना ॥

देवेन्द्रमौलिमन्दारमकरन्दकणारुणाः ॥ विघ्नं हरन्तु हेरम्बचरणाम्बुजरेणवः ॥

## अथ शिवपूजाविधिः ॥

विना भस्म त्रिपुण्ड्रेण विना रुद्राक्षमालया ॥ विना मालूरपत्रेण नार्चयेत् पार्थिवं शिवम् ॥ १ ॥ मूर्त्तयोऽष्ट शिवस्यैताः पूर्वादिक्रमयोगतः ॥ ऐशान्यन्ताः प्रपूज्यंते वेद्यांलिङ्गे शिवं भजेत् ॥ २ ॥

## पञ्चदेवतापूजा ॥

शिवं भास्करमग्निं च केशवं कौशिकींतथा॥एतान् प्रपूजयेदादौ सर्वसिद्धिफलप्रदान् ॥ मृदाहरणं घट्टनं प्रतिष्ठा ध्यानमेव च ॥ स्तवनं पूजनश्चैव विसर्ज्जनमतः परं॥ हरो महेश्वरश्चैव शूलपाणिः पिनाकधृक् ॥ पशुपतिः शिवश्चैव महादेव इति क्रमात्॥

## शिवपूजाप्रकारः ॥

हराय नम इति मृदाहरणं ॥ महेश्वराय नम

इति शर्कराकेशतुषादिरहितसंघट्टनं।। पशुपतयेनमइति स्नापयेत्।।वज्राय फट् इति वज्रं मोचयेत्।।

## जलशुद्धिः ॥

गङ्गे च यमुने चैव गोदावरि सरस्वति ॥ नर्म्मदे सिन्धुकावेरि जलेऽस्मिन् सन्निधिं कुरु ॥ पशुपतये नम इति स्नापयेत् ॥

## प्राणप्रतिष्ठा ॥

नमः शूलपाणे पिनाकधृक् इहागच्छ इहागच्छ इहतिष्ठ इह तिष्ठ इहसान्निहितो भव सुप्रतिष्ठितो भव मत्कृतां पूजांगृहाण अत्राधिष्ठानं कुरु ॥

## आसनशुद्धिः ॥

आसनमन्त्रस्य मेरुपृष्ठऋषिः सुतलं छंदः कूर्मो देवता ।। आसनोपवेशने विनियोगः ॥ पृथिव त्वया धृता लोका देवि त्वं विष्णुना धृता।।त्वञ्च धारय मां नित्यं पवित्रं कुरु चासनं ॥ वामे गुरुभ्यो

नमः । दक्षिणे गणेशाय नमः । ऊर्ध्वे ब्रह्मणे नमः । अधः अनन्ताय नमः । सम्मुखे शिवाय नमः ॥

## शिवस्य ध्यानम् ॥

ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नं ॥ पद्मासीनं समन्तात् स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं विश्वाद्यं विश्ववंद्यं निखिलभयहरं पञ्चवक्रंत्रिनेत्रं॥इतिध्यात्वा॥मानसोपचारैः संपूज्य पाद्यादिभिः पूजयेत् ॥ एतत् पाद्यं नमः शिवाय । इदमर्घ्यंनमःशिवाय । इदमाचमनीयं नमः शिवाय । एष गन्धः नमः शिवाय । एतत् पुष्पं नमःशिवाय । एतत् बिल्वपत्रं नमः शिवाय । एष धूपः नमः शिवाय । एष दीपः नमः शिवाय । एतन्नैवेद्यं नमः शिवाय । इदमाचमनीयं नमः शिवाय ॥ ऐशान्यादिक्रमेणाष्टमूर्तीः पूजयेत् । सर्वाय क्षितिमूर्त्तये नमः ॥ भवाय जलमूर्त्तये नमः ॥ रुद्राय

अग्निमूर्त्तये नमः ॥ उग्राय वायुमूर्त्तये नमः ॥ भीमाय आकाशमूर्त्तये नमः ॥ पशुपतये यजमानमूर्त्तये नमः ॥ महादेवाय सोममूर्त्तये नमः ॥ ईशानाय सूर्यमूर्त्तये नमः ॥ मध्ये नमः शिवाय ॥ नमः शिवाय इति अष्टवारं जप्त्वा स्तवपाठः कर्त्तव्यः ॥ गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपं ॥ सिद्धिर्भवतु मे देव त्वत्प्रसादान्महेश्वर ॥

## शिवाष्टकम् ॥

प्रभुमीशमनीशमशेषगुणं गुणहीन महीशगराभरणं ॥ रणनिर्जितदुर्जयदैत्यपुरं प्रणमामि शिवं शिवकल्पतरुं ॥ १ ॥ गिरिराजसुतान्वितवामतनुं तनुनिन्दितराजितकोटिविधुं ॥ विधिविष्णुशिरःस्तुतपादयुगं प्रणमामि शिवं शिवकल्पतरुं ॥ २ ॥ शशलाञ्छनरञ्जितसम्मुकुटं कटिलंबितसुंदरकृत्तिपटं ॥ सुरशैवलिनीजलसार्द्रजटं प्रणमामि शिवं शिवकल्पतरुं ॥३॥ नयनत्रयभूषितचारुमुखं

मुखपद्मविराजितकोटिविधुं ॥ विधुखण्डविमण्डि-
तभालतटं प्रणमामि शिवं शिवकल्पतरुं ॥ ४ ॥
वृषराजनिकेतनमादिगुरुं गरलाशमनाजिपिनाक-
धरं ॥ प्रमथाधिपसेवकरञ्जनकं प्रणमामिशिवंशि
वकल्पतरुम् ॥५॥ मकरध्वजमत्तकरींद्रहरं करितुं-
डगणेशविबोधकरम् ॥ वरदाभयशूलविषाणधरं
प्रणमामि शिवं शिवकल्पतरुम्।६।जगदुद्भवपालन
नाशकरं मनसैव पुनर्गुणरूपधरम्॥प्रियमानवसा-
धुजनैकगतिं प्रणमामि शिवं शिवकल्पतरुम्॥७॥
गिरिजासुहृदब्जविकासकरं शरणागतदीनसुभद्र-
परम्॥भजतोऽखिलदुःखसमूहहरं प्रणमामि शिवं
शिवकल्पतरुम् ॥८॥ न जानामितेऽहं स्तुतिध्या-
न पूजा न मंत्रंनधर्मं सदा पापचित्तः ॥ तथाप्या-
शु तत्त्वं क्षमित्वा दयालो पुनर्जन्मदुःखात्परित्रा
हि शंभो ॥ ९ ॥ इति शिवाष्टकंसमाप्तम् ॥ शिवा
ष्टके प्रणमामि शिवमितिाद्भिः पठेत् ॥

## महादेवस्य प्रणामः ॥

नमस्तुभ्यं विरूपाक्ष नमस्ते दिव्यचक्षुषे ॥ नमः पिनाकहस्ताय वज्रहस्ताय वै नमः ॥ नमस्त्रिशूलहस्ताय दण्डपाशासिपाणये ॥ नमस्त्रैलोक्यनाथाय भूतानां पतये नमः ॥ बाणेश्वराय नरकार्णवतारणाय ज्ञानप्रदाय करुणामयसागराय॥कर्पूरकुन्दधवलेन्दुजटाधराय दारिद्र्यदुःखदहनाय नमः शिवाय ॥ नमः शिवाय शान्ताय कारणत्रयहेतवे ॥ निवेदयामि चात्मानं त्वं गतिः परमेश्वर ॥

## नारायणस्य स्नानमन्त्रः ॥

नमः ॥ सहस्रशीर्षः पुरुषः सहस्राक्षः सहस्रपात् ॥ सभूमिं सर्वतः स्पृष्ट्वा अत्यतिष्ठद्दशांगुलं ॥ इतिनारायणस्यस्नानमंत्रः ॥

## नारायणस्य ध्यानम् ॥

नमः॥ ध्येयःसदा सवितृमण्डलमध्यवर्त्तीनारायणः सरसिजासनसन्निविष्टः ॥ केयूरवान् कनक-

कुण्डलवान् किरीटी हारी हिरण्मयवपुर्धृतशङ्ख-
चक्रः ॥ इति ध्यात्वा पूजयेत् ॥

## नारायणस्य प्रणामः ॥

नमोब्रह्मण्यदेवाय गोब्राह्मणहिताय च ॥
जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ॥

## अथ नारायणप्रार्थना ॥

पापोऽहं पापकर्म्माहं पापात्मा पापसंभवः ॥
त्राहि मां पुण्डरीकाक्ष सर्वपापहरो भव ॥

## अथ विष्णुस्तोत्रम् ॥

गौतम उवाच ॥ जय कृष्ण जगन्नाथ जय वैकु-
ण्ठनामधृक् ॥ जय देव कृपासिन्धो जय लक्ष्मीप-
ते प्रभो ॥ १ ॥ जय नीलाम्बुजश्याम नीलजीमू-
तसन्निभ ॥ जय पद्माधरित्रीभ्यां निषेवितपदाम्बु-
ज ॥ २ ॥ जनार्दन जगद्बन्धो शरणागतपालक ॥
त्वद्दासदासदासानांदासत्वं देहिमेप्रभो ॥ ३ ॥ इति
श्रीगौतमशतानन्दसंवादे विष्णुस्तोत्रं समाप्तम् ॥

## नवग्रहस्तोत्रम् ॥

जपाकुसुमसंकाशं काश्यपेयं महाद्युतिम्॥ध्वांतारिं सर्वपापघ्नं प्रणतोऽस्मि दिवाकरम् ॥ १ ॥ दधिशंखतुषाराभं क्षीरोदार्णवसम्भवम् ॥नमामि शशिनं भक्त्या शम्भोर्मुकुटभूषणम्॥२॥धरणीगर्भसम्भूतं विद्युत्पुञ्जसमप्रभम्॥कुमारं शक्तिहस्तं च लोहिताङ्गं नमाम्यहम् ॥३॥ प्रियङ्गुकलिकाश्यामं रूपेणाप्रतिमं बुधम् ॥ सौम्यं सर्वगुणोपेतं नमामि शशिनःसुतम् ॥४॥ देवतानामृषीणां च गुरुं कनकसन्निभम् ॥वन्द्यभूतं त्रिलोकेशं तं नमामिबृहस्पतिम्॥५॥हिमकुन्दमृणालाभं दैत्यानांपरमं गुरुं॥ सर्वशास्त्रप्रवक्तारं भार्गवं प्रणमाम्यहम् ॥ ६ ॥ नीलांजनचयप्रख्यं रविसूनुं महाग्रहम्॥छायायागर्भसम्भूतं वन्दे भक्त्याशनैश्चरम्॥७॥अर्द्धकायं महाघोरं चन्द्रादित्यविमर्दकम् ॥ सिंहिकायाः सुतं रौद्रं तं राहुं प्रणमाम्यहम्॥८॥पलाशपुष्पसंकाशं तार

ग्रहविमर्द्दकम्॥रौद्रं रुद्रात्मजं क्रूरं तं केतुं प्रणमाम्यहम् ॥ ९ ॥ व्यासेनोक्तमिदंस्तोत्रं यः पठेत् प्रयतो नरः ॥ दिवा वा यदि वा रात्रौ शांतिस्तस्य न संशयः ॥ १० ॥ ऐश्वर्यमतुलंचापि आरोग्यं पुष्टिवर्द्धनम्॥नरनारीप्रियत्वं च तथा दुःस्वप्ननाशनम्॥ ॥ ११ ॥ तक्षकोऽग्निर्यमोवायुर्येचान्ये पीडक ग्रहाः ॥ ते सर्वें प्रशमंयान्ति व्यासो ब्रूते न संशयः ॥ १२ ॥ इतिश्रीनवग्रहस्तोत्रंसंपूर्णम् ॥

## अथ दुर्गाष्टकं ॥

नमस्ते शरण्ये शिवे सानुकंपे नमस्ते जगद्व्यापिके विश्वरूपे ॥ नमस्ते जगद्वन्द्यपादारविन्दे नमस्ते जगत्तारिणि त्राहि दुर्गें ॥ १ ॥ नमस्ते जगच्चिन्त्यमानस्वरूपे नमस्ते महायोगिनि ज्ञानरूपे नमस्ते सदानन्दकन्दस्वरूपे नमस्ते जगत्तारिणि त्राहि दुर्गें ॥ २ ॥ अनाथस्य दीनस्य तृष्णातुरस्य भयार्त्तस्य भीतस्य बद्धस्य जन्तोः ॥ त्वमेका गति

देवि निस्तारदात्रि नमस्ते जगत्तारिणि त्राहि दुर्गे ॥ ३ ॥ अरण्ये रणे दारुणे शत्रुमध्येऽनलेसागरे कान्तरे राजगेहे॥ त्वमेकागतिर्देविनिस्तारहेतुर्नमस्ते जगत्तारिणि त्राहि दुर्गे ॥ ४ ॥ अपारे महादुस्तरे ऽत्यन्तघोरे विपत्सागरे मज्जतां देहभाजां ॥ त्वमेका गतिर्देवि निस्तारनौका नमस्ते जगत्तारिणित्राहिदुर्गे ॥५॥ नमश्चंडिके चण्डदोर्दण्डलीलालसत्खण्डिताखण्डलाशेषभीते॥त्वमेका गतिर्विघ्नसन्दोहहन्त्री नमस्तेजगत्तारिणि त्राहिदुर्गे ॥ ६ ॥ त्वमेकाजिताराधिता सत्यवादिन्यमेयाजिताक्रोधनाक्रोधनिष्ठा॥ इडा पिंगला त्वं सुषुम्णा च नाडी नमस्ते जगत्तारिणि त्राहि दुर्गे ॥ ७ ॥ नमोदेवि दुर्गे शिवे भीमनादे सरस्वत्यरुन्धत्यमोघस्वरूपे ॥ विभूतिः शची कालरात्रिः सती त्वं नमस्ते जगत्तारिणि त्राहि दुर्गे ॥ ८ ॥ शरणमपि सुराणां सिद्धविद्याधराणां मुनिदनुजनराणां व्याधिभिः पीडितानां॥

नृपतिगृहगतानां दस्युभिस्त्रासितानां त्वमसि शरणमेका देवि दुर्गे प्रसीद ॥ ९ ॥ इदं स्तोत्रं मयाप्रोक्तमापदुद्धारहेतुकं ॥ त्रिसन्ध्यमेकसन्ध्यं वा पठनादेवसंकटात् ॥मुच्यते नात्र सन्देहो भुवि स्वर्गे रसातले ॥ १० ॥ समस्तं श्लोकमेकं वा यः पठेद्भक्तितः सदा ॥ स सर्वदुष्कृतं तीर्त्वा प्राप्नोति परमां गतिं ॥११॥ पठनादस्य देवेशि किंन सिद्ध्यति भूतले ॥ स्तवराज इदं देवि संक्षेपात् कथितं त्वयि॥ ॥ १२ ॥ इति विश्वसारेआपदुद्धारकल्पे दुर्गास्तवराजः समाप्तः ॥ ॥ ॥ ॥

## अथाद्यास्तोत्रम् ॥

ओं नमः आद्यायै ॥ शृणु वत्स प्रवक्ष्यामि आद्यास्तोत्रं महाफलं ॥ यःपठेत् सततं भक्त्या स एव विष्णुवल्लभः ॥ १ ॥ मृत्युर्व्याधिभयं तस्य नास्ति किञ्चित् कलौयुगे ॥ अपुत्रा लभते पुत्रं त्रिपक्षं श्रवणं यदि ॥ २ ॥ द्वौमासौ बन्धनान्मुक्तिर्वि-

प्रवक्त्राच्छुतंयदि॥मृतवत्सा जीववत्सा षण्मासं श्र-
वणं यदि ॥३॥ नौकायां सङ्कटे युद्धे पठनाज्जयमा-
प्नुयात् ॥ लिखित्वा स्थापनं गेहे नाग्निचौरभयं क्व-
चित् ॥ ४ ॥ राजस्थाने जपो नित्यं प्रसन्नाःसर्वदेव
ताः ॥ ओंह्रीं ॥ ब्रह्माणीब्रह्मलोके च वैकुण्ठे सर्व-
मङ्गला ॥ ५ ॥ इंद्राणी अमरावत्यामम्बिका वरु-
णालये ॥ यमालये कालरूपा कुबेरभवने शुभा ॥
॥ ६॥ महानन्दाग्निकोणे च वायव्यां मृगवाहिनी॥
नैर्ऋत्यां रक्तदन्ताच ऐशान्यां शूलधारिणी ॥ ७ ॥
पाताले वैष्णवीरूपा सिंहले देवमोहिनी ॥ सुरसा
च मणिद्वीपे लङ्कायां भद्रकालिका ॥ ८ ॥ रामेश्व-
री सेतुबन्धे विमला पुरुषोत्तमे ॥ विडजा औंड्रदेशे
च कामाख्या नीलपर्वते ॥ ९ ॥ कालिकावङ्गदेशे
च अयोध्यायां महेश्वरी ॥ वाराणस्यामन्नपूर्णा ग-
याक्षेत्रे गयासुरी ॥ १० ॥ कुरुक्षेत्रे भद्रकाली व्रजे
कात्यायनी परा ॥ द्वारकायां महामाया मथुरायां

महेश्वरी ॥ ११ ॥ क्षुधा त्वं सर्वभूतानां वेला त्वं सागरस्य च ॥ नवमी कृष्णपक्षस्य शुक्लस्यैकादशी परा ॥१२॥ दक्षस्य दुहिता देवी दक्षयज्ञविनाशिनी ॥ रामस्य जानकी धात्री रावणध्वंसकारिणी ॥ १३ ॥ चण्डमुण्डवधे देवी रक्तबीजविनाशिनी॥ निशुम्भशुम्भमथिनी मधुकैटभघातिनी ॥ १४ ॥ विष्णुभक्तिप्रदा दुर्गा सुखदा मोक्षदा सदा ॥ इम माद्यास्तवं पुण्यं यः पठेत् सततं नरः ॥१५॥ सर्व ज्वरभयं न स्यात् सर्वव्याधिविनाशनं ॥ कोटि तीर्थफलं तस्य लभते नात्र संशयः ॥ १६ ॥ जया मे चाग्रतः पातु विजया पातु पृष्ठतः ॥ नारायणी शीर्षदेशे सर्वाङ्गे सिंहवाहिनी ॥ १७ ॥ शिवदूती उग्रदण्डे प्रत्यङ्गे परमेश्वरी॥ विशालाक्षी महामाया कौमारी शंखिनी शिवा ॥ १८ ॥ चक्रिणी जयदात्री च रणमत्ता रणप्रिया ॥ दुर्गा जयन्ती काली च भद्रकाली महोदरी ॥ १९ ॥ नारसिंही

च वाराही सिद्धिदात्री सुखप्रदा ॥ जयंकरी महा रौद्री महाभयविनाशिनी ॥ २० ॥

इति ब्रह्मयामले ब्रह्मनारदसंवादे आद्यास्तोत्रं समाप्तम् ॥ ओं तत्सत् ॥

## सङ्कटास्तोत्रम् ॥

ओं नमः सङ्कटायै ॥ नारद उवाच ॥ योगि-सेव्य मुनिश्रेष्ठ सर्वज्ञ सुखदायक ॥ आख्या नानि सुपुण्यानि श्रुतानि त्वत्प्रसादतः ॥ १ ॥ न तृप्तिमधिगच्छामि तव वागमृतेनच ॥ वदस्वैकंम हाभाग सङ्कटाख्यानमुत्तमं ॥२ ॥ इति तस्य वचः श्रुत्वा योगिसेव्योऽब्रवीद्वचः ॥ सङ्कष्टनाशनं स्तोत्रं शृणु देवर्षिसत्तम ॥ ३ ॥ द्वापरे तु पुरावृत्ते भ्रष्टरा-ज्यो युधिष्ठिरः ॥ भ्रातृभिः सहितोऽरण्यं निर्वेदं प-रमं ययौ ॥ ४ ॥ तदानीं तु ततः काशीपुराद्यातो महामुनिः ॥ मार्कण्डेय इतिख्यातो महाशिष्यो महातपाः ॥ ५ ॥ तं दृष्ट्वातु समुत्थाय प्रणिपत्यसु-

पूजितः ॥ किमर्थम्म्लानवदनमेतत्त्वं मां निवेदय ॥ ॥६॥युधिष्ठिर उवाच ॥संकटं मे महत्प्राप्तमेतादृक् वदनं ततः॥एतन्निवारणोपायं किञ्चिद्ब्रूहि महामते ॥ ७ ॥ मार्कण्डेय उवाच ॥ आनन्दकानने देवी सङ्कटा नामविश्रुता ॥ वीरेश्वरोत्तरे भागे चन्द्रेशस्य च पूर्वतः ॥ ८॥ शृणुनामाष्टकं तस्याः सर्व सिद्धिप्रदं नृणां॥ संकटा प्रथमं नाम द्वितीयं विजया तथा ॥ ९ ॥ तृतीयं कामदा प्रोक्ता चतुर्थं दुःखहारिणी ॥ शर्वाणी पञ्चमं नाम षष्ठं कात्यायनी तथा ॥ १० ॥ सप्तमं भीमनयना सर्वरोगहराष्टमं॥ नामाष्टकमिदंपुण्यं त्रिसन्ध्यं श्रद्धयान्वितः॥११॥ यः पठेत् पाठयेद्वापि नरो मुच्येत संकटात् ॥इत्युक्ता तदृषिश्रेष्ठः सतु वाराणसीं ययौ॥ १२ ॥ ततः संपूज्य तां देवीं वीरेश्वरसमन्वितां॥भुजैश्च दशभिर्युक्तां लोचनत्रितयान्वितां ॥ १३ ॥ मालाकमण्डलूपेतां वरपद्मगदाधरां ॥ त्रिशूलडमरूचापखड्गच-

र्मविभूषितां ॥ १४ ॥ इति तस्य वचःश्रुत्वा नारदोहर्षितोऽभवत् ॥ ततश्चाभयहस्तां तां प्रणम्यविधिनन्दनः ॥ १५॥ वरत्रयं गृहीत्वा तु ततोविष्णुपुरं ययौ ॥ एतत्स्तोत्रस्य पठनं पुत्रपौत्रादिवर्द्धनं॥ ॥ १६ ॥ संकष्टनाशनं चैव त्रिषुलोकेषु विश्रुतम्॥ गोपनीयं प्रयत्नेन महावन्ध्याप्रसूतिकृत् ॥ १७ ॥ इति श्रीपद्मपुराणेसंकटानामाष्टकस्तोत्रं समाप्तं ॥

ॐतत्सदित्यादिकं पठनीयं ।

## अर्गलास्तोत्रम् ॥

ओंनमश्चण्डिकायै ॥ ओं तत्सदित्युच्चार्य्य ॥ या देवी स्तूयते नित्यं विबुधैर्वेदपारगैः ॥ सा मे भवतुजिह्वाग्रे ब्रह्मरूपा सरस्वती ॥१॥ ओं ब्रह्मोवाच ॥ जय त्वं देविचामुण्डे जयं भूतार्तिहारिणि ॥ जयं सर्वगते देवि कालरात्रिनमोस्तुते॥ २ ॥ श्रीमत्सुरासुराराध्यामरुणाम्बुरुहस्तनीं ॥ चराचरजग-

द्धात्रीमम्बिकांप्रणमाम्यहं ॥ ३ ॥ जयन्ती मङ्गला
काली भद्रकाली कपालिनी॥ दुर्गा शिवा क्षमाधा-
त्रीस्वाहा स्वधा नमोस्तुते ॥ ४ ॥ मधुकैटभविध्वं-
सि विधातृवरदे नमः ॥ रूपं देहि जयं देहि यशो दे-
हि द्विषोजहि ॥ ५ ॥ महिषासुरनिर्णाशि त्रैलोक्य-
वरदेनमः ॥ रूपं०॥६॥ रक्तबीजवधे देवि चण्डमु-
ण्डविनाशिनि ॥ रूपं०॥७ ॥ शुम्भस्यैवं निशुम्भ-
स्य तथा धूम्राक्षमर्द्दिनि॥रूपं०॥८॥ वन्दितांघ्रियु-
गेदेवैर्देवि सौभाग्यदायिनि ॥ रूपं० ॥ ९ ॥ अचि-
न्त्यरूपचरिते सर्वशत्रुविनाशिनि ॥ रूपं० ॥ १०॥
नतेभ्यः सर्वदा भक्त्या चण्डिके दुरितापहे ॥ रूपं०
॥ ११ ॥स्तुवतां भक्तिपूर्वं त्वां चण्डिकेव्याधिनाशि-
नि ॥ रूपं० ॥ १२ ॥ सुरथश्च समाधेश्च दत्तमिष्टं
वरं वरं ॥ रूपं० ॥ १३ ॥ चण्डिके सततं येत्वाम-
र्चयन्तीह भक्तितः ॥ रूपं० ॥ १४ ॥ देहिसौभा-
ग्यमारोग्यं देहि देवि परं सुखं ॥ रूपं० ॥ १५ ॥

विधेहि देवि कल्याणं विधेहि विपुलां श्रियं ॥ रूपं० ॥ १६ ॥ चण्डिके सततं दुर्गे जयं दास्यसि सर्वदा॥ रूपं० ॥१७॥ विधेहि द्विषतां नाशं विधेहि बलवर्च्चसी ॥ रूपं० ॥१८॥ सुरासुरशिरोरत्ननिघृष्टचरणांबुजे ॥ रूपं० ॥१९॥ विद्यावन्तंयशस्वंतं लक्ष्मीवन्तं जनंकुरु ॥ रूपं ॥ २० ॥ देवि प्रचण्डदोर्दण्डदैत्यदर्पनिषूदिनि ॥ रूपं०॥ २१ ॥ प्रचण्डदैत्यदर्पघ्नेचण्डिके प्रणतोऽस्मिते ॥ रूपं० ॥२२॥ चतुर्वक्त्रैश्चतुर्वक्त्रसंस्तुते परमेश्वरि॥ रूपं० ॥ २३ ॥ कृष्णेन संस्तुते देवि शश्वद्भक्त्या त्वमम्बिके ॥रूपं० ॥ २४॥ हिमाचलसुतानाथसंस्तुते परमेश्वरि ॥ रूपंदे० ॥ २५ ॥ इन्द्राणीपतिसद्भावपूजिते परमेश्वरि ॥ रूपंदेहि० ॥ २६ ॥ देवि भक्तजनोद्दामदत्तानन्दोदयेऽम्बिके ॥ रूपं० ॥ २७ ॥ पत्नींमनोरमां देहि मनोवृत्यनुसारिणीं ॥ तारिणींदुर्गसंसारसागरस्याचलोद्भवे ॥२८॥ इदं स्तो-

त्रं पठित्वा तु महास्तोत्रं पठेन्नरः॥स तु सप्तशती-
संख्यावरमाप्नोति सम्पदाम् ॥२९॥ नान्यथा फ-
लमाप्नोति श्रीशिवस्यानुशासनात् ॥ ३० ॥ इति
ब्रह्मांडपुराणे मार्कंण्डेयब्रह्मसंवादे अर्गलास्तोत्रंस-
माप्तम् ॥ श्रीजगदंबार्पणमस्तु ॥

## कीलकस्तोत्रम् ॥

ओं तत्सत्॥मार्कण्डेय उवाच॥विशुद्धज्ञानदेहा-
य त्रिदेवीदिव्यचक्षुषे ॥ श्रेयःप्राप्तिनिमित्ताय नमः
सोमार्द्धधारिणे ॥ १ ॥ सर्वमेतद्विजानीयान्मन्त्रा-
णामपिकीलकं ॥ सोऽपिक्षेममवाप्नोति सततं
जाप्यतत्परः॥२॥सिद्धयंत्युच्चाटनादीनि कर्माणि
सकलान्यपि ॥ एतेनस्तुवतां देवीं स्तोत्रमात्रेण
भक्तितः ॥३॥ न मन्त्रो नौषधं तस्य न किञ्चिद-
पि विद्यते ॥ विना जाप्येन सिध्येत सर्वमुच्चाटना
दिकं ॥ ४ ॥ समग्राण्यपि सिध्यन्ति लोकशङ्का-
मिमां हरः ॥ कृत्वानिमन्त्रयामास सर्वमेवमिदं

शुभं ॥५॥ स्तोत्रंवै चण्डिकायास्तु तच्च गुह्यं चकार सः ॥ ( सम्पूर्णफलमेतेन ततः प्रारभ्यतेच तत् ॥ ऐश्वर्यं त्वत्प्रसादेन सौभाग्यारोग्यसम्पदः॥) सम्प्राप्नोति सुपुण्येन तां यथावन्नियंत्रणाम् ॥ ६ ॥ सोपि क्षेममवाप्नोति सर्वमेव न संशयः ॥ कृष्णायां वा चतुर्दश्यामष्टम्यां वा समाहितः ॥७॥ ददाति प्रतिगृह्णाति नान्यथैषा प्रसीदति ॥ इत्थंरूपेण कीलेनमहादेवेन कीलितं ॥ ८ ॥ यो निष्कीलां विधायैनां चण्डीं जपति नित्यशः॥ ससिद्धःसगणः सोऽथ गन्धर्वो जायते ध्रुवं ॥ ९ ॥ न चैवान्यशुभं तस्य भयं क्वापि न जायते ॥ नापमृत्युवशं याति मृतो मोक्षमवाप्नुयात् ॥ १० ॥ ज्ञात्वा प्रारभ्य कुर्वीत ह्यकुर्वाणो विनश्यति ॥ ततो ज्ञात्वैव संपूर्णमिदं प्रारभ्यते बुधैः ॥११॥ सौभाग्यादि च यत् किञ्चिद्दृश्यते ललनाजने ॥तत्सर्वं तत्प्रसादेन तेन जाप्यमिदं सदा ॥ १२ ॥ शनैस्तु जाप्यमाने

ऽस्मिन् स्तोत्रे सम्पत्तिरुच्चकैः ॥ भवत्येवसमग्रा-
हि ततः प्रारभ्यमेवतत ॥१३ ॥ ऐश्वर्यं यत्प्रसादेन
सौभाग्यारोग्यसंपदः ॥ शत्रुहानिः परो मोक्षः स्तू-
यते सा न किं जनैः ॥ १४ ॥ चण्डिकां हृदये
नापि यः स्मरेत्सततं नरः ॥ हृद्यं काममवाप्नोति
हृदि देवी वसेत् सदा ॥१५॥ अग्रे वेदं महादेव्याः
कृत्वा कीलकधारणं॥निष्कीलकं तथा कृत्वा पठि
तव्यं समाहितैः ॥१६॥ सर्वेषांचैव देवानां विद्या-
नां चयशस्विनां ॥ इदं योनिः समाख्याता सर्वम-
न्त्रेषु गोपिता ॥ १७ ॥ इति श्रीब्रह्माण्डपुराणेमा-
र्कण्डेयब्रह्मसंवादे कीलकस्तवः समाप्तः ॥

## नवग्रहस्तोत्रं पुनः पठनीयम् ॥

## भगवत्याः प्रणामः ॥

सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके ॥ शर-
ण्ये त्र्यम्बके गौरि नारायणि नमोस्तुते ॥ १ ॥

## सरस्वत्या ध्यानं ॥

तरुणसकलमिन्दुं बिभ्रती शुभ्रकान्तिः कुचभरनमिताङ्गी सन्निषण्णासिताब्जे॥ निजकरकमलोद्यल्लेखनीपुस्तकश्रीः सकलविभवसिद्ध्यै पातु वाग्देवता नः ॥ १ ॥

## सरस्वत्याः प्रणामः ॥

भद्रकाल्यै नमोनित्यं सरस्वत्यै नमोनमः ॥ वेदवेदान्तवेदाङ्गविद्यास्थानेभ्य एव च ॥ १ ॥

## गरुडस्तोत्रम् ॥

सुपर्णं वैनतेयं च नागारिं नागनाशनं॥विषान्तकं जितविषमजितं विश्वरूपिणम्॥१॥गरुत्मन्तं खगपतिं तार्क्ष्यं कश्यपनन्दनं ॥ द्वादशैतानि नामानि गरुडस्य महात्मनः॥२॥यः पठेत् प्रातरुत्थाय स्नातो वा शयने ऽपिवा ॥ विषं न क्रमते तस्य न तंहिंसन्तिपन्नगाः ॥ ३ ॥ संग्रामे विजयस्तस्य ब-

न्धने मुक्तिमाप्नुयात्॥यात्रायां लभतेसिद्धिं तस्मा-
न्नित्यं पठेन्नरः ॥४॥ इ० गरुडपुराणेगरुडस्तोत्रंसं०

## मनसायाध्यानम् ॥

आस्तीकस्य मुनेर्मात्रे भागिन्यै वासुकेस्तथा॥
जरत्कारुमुनेः पत्न्यै मनसायै नमोस्तुते ॥ १ ॥

## लक्ष्मीध्यानम् ॥

पाशाक्षमालिकाम्भोजसृणिभिर्याम्यसौम्य-
योः ॥ पद्मासनस्थां ध्यायेच्च श्रियं त्रैलोक्यमातरं
॥१॥गौरवर्णांसुरूपाञ्च सर्वालङ्कारभूषितां ॥रौक्म-
पद्मव्यग्रकरां वरदां दक्षिणेनतु॥२॥श्रीकु०मस्तु॥

## लक्ष्मीप्रार्थना ॥

नमस्ते सर्वभूतानां वरदासि हरिप्रिये ॥ या
गतिस्त्वत्प्रपन्नानां सा मे भूयात्त्वदर्चनात्॥१॥ध-
नदायै नमस्तुभ्यं नित्यं पद्मालयेरमे ॥ भवन्तु त्व-
त्प्रसादान्मे धनधान्यादिसम्पदः॥ २ ॥

## गुरुप्रणामः ॥

अखण्डमण्डलाकारं व्याप्तं येन चराचरं॥तत्प-
दं दर्शितं येन तस्मै श्रीगुरवे नमः ॥ १ ॥

## विष्णुचरणामृतधारणमन्त्रः ॥

अकालमृत्युहरणं सर्वव्याधिविनाशनम् ॥ वि-
ष्णुपादोदकं पीत्वा शिरसाधारयाम्यहम् ॥ १ ॥

## विप्रपादोदकधारणेमन्त्रः ॥

विप्रपादोदकं पीत्वा यावत्तिष्ठति मेदिनी ॥
तावत् पुष्करपात्रेण पिबन्तिपितरोदकम् ॥ १ ॥

इति नित्यकर्मपद्धतिः संपूर्णा ॥

---

पुस्तकमिलनेका ठिकाना–

खेमराज श्रीकृष्णदास.

श्रीवेंकटेश्वर छापाखाना–बम्बई.